# संस्कृतसरणिः

## द्वितीयो भागः

कर्त्ता....

**केशवप्रसादमिश्रः**

हिन्दूविश्वविद्यालयस्याध्यापकः

काशीवास्तव्यः

प्रकाशक

**नन्दकिशोर एण्ड ब्रदर्स,**

पब्लिशर्स, बनारस।

प्रथम संस्करण ] १९३२ [ मूल्य ॥=)

# FOREWORD

About fifteen years ago I had the first occasion to observe a Sanskrit lesson conducted in the Direct Method by Pt. Keshava Prasad Misra in a class of beginners. It was a rich treat to me. Since then I wished very much that there were text books on these lines. Subsequently, however, I came accross several Sanskrit Readers written according to modern educational principles. Some of them were prescribed by the Department for classes VI to VIII. But none of them fulfilled my expectations, though they contained much useful matter. Most of them were written in imitation of Direct Method English Readers and as such they could not maintain the purity of Sanskrit style. Now it gives me great pleasure to see the right man in the right place. Pt. Keshava Prasad Misra is a born teacher and profound Sanskrit scholar. His is the purest Sanskrit style and he has presented the lessons in a most natural way. The lessons in his "Sanskrit Sarani" have been very judiciously selected and carefully graduated according to the difficult stages. Every lesson in the first part is accompanied by a short lesson on grammar bearing on the declension of such words and the conjugation of such roots only as are absolutely necessary for a clear grasp of the text. In this part every lesson is also followed by a series of questions to ensure preparation of the text by the students.

In the second part a little more difficult and connective passages from the Ramayan, the Mahabharata and similar other standard books have been arranged in a progessive order. But grammar has been explained at the end of the book in such details as the students of Class VIII can be reasonably expected to follow.

The author seems to have taken great pains in his selection and arrangement of these lessons. Like a clever bee he has collected honey from the "Nandan Kanan" of Sanskrit literature. These lessons will not only teach Sanskrit language and grammar in an easy way without much trouble on the part of the student; but will also instill into him the essence of Hindu culture. Generally students do not relish abstract lessons on morality or religion, but I feel confident that every student of this book will enjoy immensely, particularly the last lesson on "**प्रश्नोत्तरमाला**", which embodies all the ten "Lakshanas" of Dharma in pithy sayings but in delicious language.

CENTRAL HINDU SCHOOL,<br>BENARES.<br>*The 2nd Nov., 1932.*

**KALI PRASANNA CHAKRAVARTI**<br>**ADDITIONAL HEAD MASTER,**<br>***Central Hindu School.***

# अध्यापकान् प्रति काचन निवेदना

आर्याः सधर्माणः,

महर्षिभिरन्वाख्याता संस्कृतं नामेयं दैवी वाक् तथा प्रतिष्ठापितापि परमेष्ठिना परिगृहीतापि तपःस्वाध्यायनिरतैः पूर्वसूरिभिः प्रसाधितापि वाङ्मयमणिकारैः कालिदासादिभिः किमिति दूरादपि दवीयः क्रियतेतरामस्माकं तत्पुत्रपुत्राणां सान्निध्यादित्येषा पृच्छा कन्न विपश्चितं चिन्तायां विनिक्षिपेत् ?

चिन्त्यमानानि चास्य महतो विपर्यासस्य कारणानि तावदित्थं स्फुरन्ति—

१. साधनसम्पन्नानां संस्कृतशिक्षापराङ्मुखत्वम् ।
२. आङ्ग्लविद्यालयेषु संस्कृतप्रतिपक्षविषयाणां समयानुकूल्यमुपयोगातिशयोक्तिश्च ।
३. तत्र पाठ्यत्वेन निर्दिष्टपुस्तकानां शिष्टापरिगृहीतसंस्कृताभाससंदृब्धविजातीयार्थभूयस्त्वम् ।
४. अविज्ञानानुगृहीतमिति, पुराणरीतिकदर्थितमिति, रटनपटुताप्रधानमिति, दुर्निवारव्याकरणग्रहगृहीतमिति, लोकानभिज्ञमन्दमन्थरजनाधिकृतमिति भूयांसोऽध्यापनमधिकृत्य प्रवर्त्तिताः प्रवादाः ।

तेषु पूर्वयोर्द्वयो राजाधीनप्रतीकारत्वादस्मत्प्रयत्नानिवर्त्त्यत्वे अभ्युपगतेऽपि किं नास्माभिरुत्तरयोः प्रतिषेधाय प्रयतनीयम् ?

एतस्यां पुनः **संस्कृतसरणौ** अध्येतव्याः प्रपाठका आत्मना वपुषा च तथा विन्यस्ता यथा बहोः कालादध्यापकैरनुकम्पितां विवृतिम् ( Translation Method ) अद्यत्वे शिक्षाविज्ञानविदामपि बहुमतं व्यवहारम् (Direct Method) च यथायथं सममेव उपकुर्वीरन्निति ।

यत्सत्यं विवृतिव्यवहारयोर्व्यवहार एव साधीयान् ।
शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च ।

वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इत्यत्राभिहितेषु शक्तिग्राहकेषु व्यवहारस्यैव नागेशादिभिर्मञ्जूषादौ शिरोमणित्वेन व्यवस्थापनात् । बालोऽपि खल्वपाठितोऽपि व्यवहारेणैव गृहभाषामभ्यस्यति । अभ्यर्हयन्ति च—

उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य 'गामानय' इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य "सास्नादिमत्पिण्डानयनमर्थः" इति प्रथमं प्रतिपद्यते अनन्तरं च 'गां बधान' 'अश्वमानय' इत्यादावावापोद्वापाभ्यां गोशब्दस्य 'सास्नादिमानर्थः' आनयनपदस्य 'आहरणमर्थः' इति संकेतमवधारयति ।

इत्यादिसाङ्गवर्णनामुखेन व्यवहारमेवालङ्कारिका अपि ।

तद्यदि व्यवहारमनुगृह्णद्भिस्तत्रभवद्भिरध्यापकैः सरणिरियमनुस्रियेत संभावयामि च्छात्रा अपि बाढमनुरक्ता न संस्कृताद् विरक्ततामासादयेयुर्नापि सहभुवा भाषणकौतुकेन गाढमावर्जिता व्याकरणविभीषिकां वाऽनुभवेयुः ।

अत्र सरणावारम्भादेव संस्कृतस्वभावमनुभूय संकलिताः प्रायशोऽभिनवाः सन्दर्भा न केवलं केवलकाककूर्ममृगादीनां कथाभिरुत्पादितां किशोराणामरुचिं शमयेयुरपि तु

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपोऽथ समाधानं व्याख्यानं षड्विधं मतम् ॥

इत्युक्तदिशा प्रवचने पटुतामादधानैरुपाध्यायैरध्यापिता गुणिनिकया व्यवहृताश्चेद्बोधपूर्वमेव तत्र प्रगाढां व्युत्पत्तिं प्रगुणयेयुः कुर्युश्च सुकुमारमतीन् बालानपि भाषासौष्ठवनिपुणकर्णान् ।

अन्ते च पाणिनिपद्धतिमनुसृत्य विरचितानि सन्धिसूत्राणि रीत्यन्तरातिरिक्तेन सौकर्येण विनेयानां रसनासु नृत्येयुरुत्पादयेयुश्च तत्र परमनैपुणीमित्येता अन्याश्च शतं संभावनाः श्रीमत्स्वेवायत्तन्त इति भूयो भूयः साञ्जलिबन्धं भवतां मनस्सु लगयन् विरमति ।

काशी, विजया १९८९

कश्चन भवतां विधेयः
**केशवप्रसादमिश्रः ।**

# विषय-सूची ।

## व्याकरण

श्रीः

# संस्कृतसरणिः

## द्वितीयो भागः

### प्रथमः प्रपाठकः

#### रामायणरचनाप्रस्तावः

वाल्मीकिगिरिसम्भूता रामाम्भोनिधिसंगता ।
श्रीमद्रामायणी गङ्गा पुनाति भुवनत्रयम् ॥
कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरूढकविताशाखं वन्दे वाल्मीकिकोकिलम् ॥
यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥

अस्ति आर्यावर्त्तविषये तमसा नाम स्रोतस्वती विमलसलिलशालिनी । पुरा द्वितीये युगे वल्मीकजन्मा वाल्मीकिरिति विश्रुतनामधेयो महर्षिः प्राचेतसस्तस्या विविक्तायां तीरभूमौ कृताश्रमो निवस-

ति स्म । अथैकदा भगवान् वीणामुनिः परिभ्रमन् यदृच्छया तमुपागतः किल महर्षिं वाल्मीकिम् । स च त्रिकालज्ञं देवर्षिमतिथिमासाद्य परया प्रीत्या कृतातिथ्यः परिपप्रच्छ, भगवन् !

कोन्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥
चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥

सर्वमेतत् श्रोतुमिच्छामि । परं हि मे कौतूहलम् । त्वमेवैक एवंविधम् नरं ज्ञातुमर्हसि, यत् त्रिभुवनचरः सर्वज्ञोऽसि । महर्षेस्तादृशं कौतूहलमवगम्य प्रहृष्टो देवर्षिर्नारदः श्रूयतामित्यामन्त्र्य वक्तुमुपचक्रमे—

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥
बुद्धिमान् नीतिमान् वाग्मी श्रीमान् शत्रुनिबर्हणः ।
विपुलांसो महाबाहुः कम्बुग्रीवो महाहनुः ॥
पीनवक्षा विशालाक्षो लक्ष्मीवाञ्शुभलक्षणः ।

प्रजापतिसमः श्रीमान् धाता रिपुनिसूदनः ॥
रक्षिता जीवलोकस्य धर्मस्य परिरक्षिता ।
सर्वदाभिगतः सद्भिः समुद्र इव सिन्धुभिः ॥
आर्यः सर्वसमश्चैव सदैव प्रियदर्शनः ।

ईदृशैरन्यैश्च स्पृहणीगुणैरुपेतो राजति रामचन्द्रो दाशरथिर्धरायामिदानीम् ।

ततोऽनुक्रमेण निखिलमस्मै व्यवृणुत सीतापतिचरितं श्रोत्रसुधानिधानं नाकमुनिर्नारदः ।

अथ यथावद् वाल्मीकिना पूजितः स देवर्षिस्तमापृच्छ्य तदभ्यनुज्ञातश्च त्रिदिवं प्रपेदे । वाल्मीकिरपि सह शिष्यैरभिषेकार्थमुपगतस्तमसा तटं परमरमणीयम् । तत्र च युग्मेन चरतोः क्रौञ्चयोः व्याधेन विध्यमानं पुमांसं रुधिरपरीताङ्गं महीतले विचेष्टमानम् आलोकयतः शृण्वतश्च सहचरविरहितायाः क्रौञ्चदयितायास्तां हृदयमर्मस्पृशं करुणामार्त्तगिरं करुणार्द्रचेतसो महर्षेर्मुखात् सहसोदचरत् कापि वाक् छन्दस्वती—

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।

यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥

तेन खलु पुनः समयेन तमेवं स्ववाक्यविस्मयाविष्टं महर्षिं प्राचेतसमुपगम्य भगवान् भूतभावनो विरिञ्चिरवदत्, ऋषे! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि। तद्ब्रूहि रामचरितम्। अव्याहतज्योतिः आर्षं ते प्रातिभं चक्षुः। आद्यः कविरसि। इत्युक्त्वाऽन्तर्हितो भगवान् परमेष्ठी।

अथ भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्त्तमितिहासं रामायणं नारदवर्णनामनुसृत्य प्रणिनाय। सा च पीयूषमयी रामायणी कथा महर्षिशिष्याभ्याम् कुशीलवाभ्यां जगति सर्वत्र गीता। तथाचोक्तम्।

प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः।
चकार चरितं कृत्स्नं विचित्रपदमर्थवत् ॥
काव्यं रामायणं कृत्स्नं सीतायाश्चरित महत्।
पौलस्त्यवध इत्येवं चकार चरितव्रतः ॥
कुशीलवौ तु कार्त्स्न्येन धर्ममाख्यानमुत्तमम्।
यथोपदेशं तत्वज्ञौ जगतुस्तौ समाहितौ ॥

———

# द्वितीयः प्रपाठकः

## बुद्धिवैभवम्

उज्जयिनी नाम पुरी, तस्याः समीपवर्त्ती कश्चिन्नटानामेको ग्रामः, तत्र च ग्रामे भरतो नाम नटः, तस्य पुत्रो रोहको नाम जन्मनैव प्राज्ञः प्रज्ञागुणै राजानं तोषयित्वा प्रधानामात्यपदमलभत । तद्यथा–

अथैकदा रोहकः पित्रा सहोज्जयिनीं पुरीमगच्छत् । दृष्टा च तेन अमरपुरीवोज्जयिनी, सविस्मयचेतसा च सकलापि यथावत् परिभाविता । ततः पित्रैव सह नगर्या निर्यातुमारेभे । पिता च किमपि मे विस्मृतमिति रोहकं सिप्रानदीतटेऽवस्थाप्य तदानयनाय भूयोऽपि नगरीं प्राविक्षत् । रोहकोऽपि च तत्र सिप्रायाः सैकते बालचापलवशात् सप्राकारां परिपूर्णामपि पुरीं सिकताभिरालिखत् । इतश्च राजा अश्ववाहनिकायामश्वं वाहयन् कथञ्चिदेकाकीभूतस्तेन पथा समागन्तुं प्रावर्त्तत । तं च स्वलिखितनगरीमध्येन

समागच्छन्तं रोहकोऽवादीत्–भो राजपुत्र ! माऽनेन पथा समागमः, तेनोक्तं किमिति ? रोहक आह–किं त्वं राजकुलमिदं न पश्यसि ? स राजा कौतुकवशात् सकलामपि नगरीं तदालिखितामवैक्षत, अपृच्छच्च तं बालकम्–रे अन्यदा त्वया नगरी दृष्टाऽऽसीन्न वा ? रोहक आह–नैव कदाचित्, केवलमहमद्यैव स्वग्रामादिहागतः । ततश्चिन्तयामास राजा–अहो ! बालकस्य प्रज्ञातिशय इति । ततः पृष्टो रोहको वत्स ! किं ते नाम क्व वा ग्राम इति ? तेनोक्तम्–रोहक इति मे नाम, प्रत्यासन्ने च पुरो ग्रामे वसामि। अत्रान्तरे समागतो रोहकस्य पिता चलितौ च स्वग्रामं प्रति द्वावपि। राजा च स्वस्थानमगच्छत्, चिन्तयति स्म च–ममैकोनानि मन्त्रिणां पञ्चशतानि विद्यन्ते, तद्यदि सकलमन्त्रिमण्डले मूर्धाभिषिक्तो महाप्रज्ञातिशायी बाल एष परमो मन्त्री सम्पद्यते ततो मे राज्यं सुखेनैधते, बुद्धिबलोपेतो हि राजा प्रायः शेषबलैरल्पबलोऽपि न पराजयस्थानं भवति पराँश्च राज्ञो लीलया विजयते। एवं चिन्तयित्वा

कतिपयदिनानन्तरं रोहकबुद्धिपरीक्षानिमित्तं सामान्यतो ग्रामप्रधानपुरुषानुद्दिश्यैवमादिष्टवान्—

## प्रथमा परीक्षा

युष्मद्ग्रामस्य बहिरतीव महती या शिला वर्त्तते तामनुत्पाट्य राजयोग्यमण्डपाच्छादनं कुरुत । तत एवमादिष्टे सकलोऽपि ग्रामो राजादेशं कर्त्तुमशक्यं परिभावयन्नाकुलीभूतमानसो बहिः समायामेकत्र मिलितवान् । पृच्छति स्म परस्परं—किमिदानीं कर्त्तव्यम् ? दुष्टो राजोदेशोऽस्माकमापतितो, राजादेशाकरणे च महाननर्थोपनिपातः । एवं च चिन्तया व्याकुलीभूतानां तेषां मध्यन्दिनमागतं, रोहकश्च पितरमन्तरेण न भुङ्क्ते पिता च ग्राममेलापके मिलितो वर्त्तते । ततः स क्षुधा पीडितः पितुः समीपे समागत्य रोदितुं प्रावर्त्तत—पीडितोऽहमतीव क्षुधा, ततः समागच्छ गृहे भोजनायेति, भरतः प्राह—वत्स ! सुखितोऽसि त्वं न किमपि ग्रामकष्टं जानासि । स प्राह—पितः किं किं तत् ? ततो भरतो राजादेशं सविस्तरमकथयत् ।

ततो निजबुद्धिप्रागल्भ्यवशात् झटिति कार्यस्य साध्यतां परिभाव्य तेनोक्तं—माऽऽकुलीभवत यूयं, खनत शिलाया राजोचितमण्डपनिष्पादनायाधस्तात् स्तम्भाँश्च यथास्थानं निवेशयत, भित्तीश्चोपलेपादिना प्रकारेणातीव रमणीयाः प्रगुणीकुरुत। तत एवमुक्ते सर्वैरपि ग्रामप्रधानपुरुषैर्भव्यमिति प्रतिपन्नम्। गतः सर्वोऽपि ग्रामलोकः स्वस्वगृहे भोजनाय, भुक्त्वा च समागतः शिलाप्रदेशे, प्रारब्धं तत्र कर्म, कतिपय-दिनैश्च निष्पादितः परिपूर्णो मण्डपः, कृता च शिला तस्याच्छादनं, निवेदितं च राज्ञे राजनियुक्तैः पुरुषैः-देव! निष्पादितो ग्रामेण देवादेशः। राजा प्राह—कथ-मिति ? ततस्ते सर्वमपि मण्डपनिष्पादनप्रकारं कथयामासुः। राजाऽपृच्छत् कस्येयं बुद्धिः ? तेऽवदन्-देव ! भरतपुत्रस्य रोहकस्येति।

## द्वितीया परीक्षा

ततो भूयोऽपि राजा मेण्ढकमेकं प्रेषितवान्। एष यावत्पलप्रमाणः सम्प्रति वर्त्तते पक्षातिक्रमेऽपि तावत्पलप्रमाण एव समर्पणीयो न न्यूनो नाप्यधिक-

इति। तत एवं राजादेशे समागते सति सर्वोऽपि ग्रामो व्याकुलीभूतचेता बहिः समायामेकत्र मिलितवान्, सगौरवमाकारितो रोहकः आभाषितश्च ग्रामप्रधानैः पुरुषैः—वत्स! प्राचीनमपि दुष्टराजादेशसिन्धुं त्वयैव निजबुद्धिसेतुबन्धेन समुत्तारितः सर्वोऽपि ग्रामः, ततः सम्प्रत्यपि प्रगुणीकुरु निजबुद्धिसेतुबन्धं येनास्यापि दुष्टराजादेशसिन्धोः पारमधिगच्छाम इति। ततः प्राह रोहको—वृकं प्रत्यासन्नं धृत्वा मेण्ढकमेनं यवसदानेन पुष्टीकुरुत, यवसं हि भक्षयन्नेष न दुर्बलो भविष्यति, वृकं च दृष्ट्वा न बलवृद्धिमाप्स्यतीति। ततस्ते तथैव कृतवन्तः पक्षातिक्रमे च तं राज्ञे समर्पितवन्तः तोलने च स तावत्पलप्रमाण एव जात इति समानं पूर्वेण।

## तृतीया परीक्षा

ततो भूयोऽपि राज्ञा कतिपयदिनानन्तरं कुक्कुटः प्रेषितः, एष द्वितीयं कुर्कुटं विना योधितव्य इति। एवं सम्प्राप्ते राजादेशे मिलितः सर्वोऽपि ग्रामो बहिः-सभायाम्, आकारितो रोहकः, कथितश्च तस्य राजा-

देशः । ततो रोहकेण आदर्शको महाप्रमाण आनायितो निमृष्टश्च भूत्या सम्यक्, ततो धृतः पुरो राजकुर्कुटस्य । ततः स राजकुर्कुटः प्रतिविम्बमात्मीयमादर्शे दृष्ट्वा मत्प्रतिपक्षोऽयमपरः कुर्कुट इति मत्वा साहङ्कारं योद्धुं प्रवृत्तः । जडचेतसो हि प्रायस्तिर्यश्चो भवन्ति । एवं चापरकुर्कुटमन्तरेण योधिते राजकुर्कुटे विस्मितः सर्वोऽपि ग्रामलोकः सम्पादितो राजादेशः निवेदितं च राज्ञो निजपुरुषैः ।

## चतुर्थी परीक्षा

ततो भूयोऽपि कतिपयदिवसातिक्रमे राजा निजादेशं प्रेषितवान् । युष्मद्ग्रामस्य समीपे रमणीया बालुका विद्यन्ते, ततः स्थूला बालुकामयाः कतिपये [1]दवरकाः कृत्वा शीघ्रं प्रेषणीया इति । एवं राजादेशे समागते मिलितः सर्वोऽपि बहिः सभायां ग्रामः पृष्टश्च रोहकः, ततो रोहकेण प्रत्युत्तरितम्—नटा वयं, नृत्तमेव वयं कर्त्तुं जानीमो न दवरकादि, राजादेशश्चावश्यं कर्त्तव्यः, ततो बृहद् राजकुल-

१. cf. दाँवरी, जेंवर=रस्सी ( जैनसंस्कृतशब्दः )

मिति चिरन्तना अपि कतिचिद् बालुकामया दवरका भविष्यन्तीति तन्मध्यादेकः कश्चित् प्रतिच्छन्दभूतः प्रेषणीयो येन तदनुसारेण वयमपि तथा विधान् दवरकान् कुर्म इति। ततो निवेदितमेतद् राज्ञे, राजा च निरुत्तरीकृतस्तूष्णीमास्ते।

## पञ्चमी परीक्षा

ततः पुनरपि जीर्णहस्ती रोगग्रस्तो मुमूर्षुर्ग्रामे राज्ञा प्रेषितो, यथायं हस्ती मृत इति न निवेदनीयो वार्त्ता च प्रतिदिनमस्य कथनीया, अकथने महान् ग्रामस्य दण्ड इति। एवं च राजादेशे समागते तथैव मिलितः सर्वोऽपि बहिःसभायां ग्रामः पृष्टश्च रोहकः। ततो रोहकेणोक्तं—दीयतामस्मै यवसः पश्चाद् यद् भविष्यति तत् करिष्यामि। ततो रोहकादेशेन दत्तो यवसस्तस्मै, रात्रौ च हस्ती पञ्चत्वमगच्छत्। ततो रोहकवचनेन ग्रामो गत्वा राज्ञे न्यवेदयत्—देव! अद्य हस्ती न निषीदति नोत्तिष्ठति न कवलं गृह्णाति नापि नीहारं करोति नाप्युच्छ्वासनिःश्वासौ विदधाति, किं बहुना देव! कामपि सचे-

तनचेष्टां न करोति । ततो राज्ञा भणितं–किं रे मृतो हस्ती ? ततो ग्राम आह देव ! वेदपादा एवं ब्रुवते न वयमिति । एवमुक्ते राजा मौनमाधाय स्थितः।

## षष्ठी परीक्षा

ततो भूयोऽपि दिनातिक्रमे राजा समादिष्टवान्–अस्ति यौष्मकीणे ग्रामे सुस्वादुजलपूर्णः कूपः, स इह सत्वरं प्रेषितव्यः । तत एवमादिष्टो ग्रामो रोहकं पृष्टवान् रोहकश्च प्राह—एष ग्रामेयकः कूपो, ग्रामेयकश्च स्वभावाद् भीरुर्भवति न च सजातीय-मन्तरेण विश्वासमुपगच्छति । ततो नागरिकः कश्चिदेकः कूपः प्रेष्यतां येन तत्रैष विश्वस्य तेन सह समागच्छति । एवं निरुत्तरीकृत्य विसर्जिता राज-पुरुषाः, तैश्च राज्ञो निवेदितं, राजा स्वचेतसि रोह-कस्य बुद्ध्यतिशयं परिभाव्य मौनमवलम्ब्य स्थितः।

## सप्तमी परीक्षा

ततो भूयोऽपि राजा कतिपयवासरातिक्रमेऽभि-हितवान्—वनखण्डो ग्रामस्य पूर्वस्यां दिशि वर्त्तमानः पश्चिमायां दिशि कर्त्तव्यइति । अस्मिन्नपि राजा-

देशे समागते ग्रामो रोहकबुद्धिमुपजीव्य वनखण्डस्य पूर्वस्यां दिशि व्यतिष्ठत। ततो जातो ग्रामस्य पश्चिमायां दिशि वनखण्डः।

तदेवं रोहकबुद्धिवैभवेन विस्मितचेता भूपतिः परमतुष्टो रोहकं सर्वेषां मन्त्रिणां मूर्धाभिषिक्तं मन्त्रिणमकरोत्।

---

टिप्पणी—अध्यापकः कांश्चित् परीक्षाप्रकारान् छात्रैः संस्कृत-एवानुवादयेत्। सति च स्खलितेऽन्तरान्तरा विशोधयेत्।

# तृतीयः प्रपाठकः

## स्यमन्तकमणेर्मार्गणम्

भजिनभजमानदिव्यान्धकदेवावृधमहाभोज-वृष्णिसंज्ञाः सप्त सत्त्वतस्य पुत्रा बभूवुः।

भजमानस्य निमिवृकणवृष्णयः, तथाऽन्ये तद्वै-मात्राः शताजित्सहस्राजिदयुताजित्संज्ञाः।

देवावृधस्यापि बभ्रुः पुत्रोऽभूत्। तस्य चायं श्लोको गीयते—

यथैव शृणुमो दूरादपश्याम तदन्तिकात्।
बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः॥
पुरुषाः षट् च षष्टिश्च षट् सहस्राणि चाष्ट च।
येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि॥

महाभोजस्त्वतिधर्मात्मा। तस्यान्वये भोजा मार्तिकावता[1] बभूवुः। वृष्णेः सुमित्रो युधाजिच्च पुत्रोऽभवत्। ततश्चानमित्रशिनी तथा। अनमित्रा-

---

१. मृत्तिकावतं नाम पुरं तत्र भवाइत्यर्थः।

न्निघ्नः, निघ्नस्य प्रसेनसत्राजितौ। तस्य च सत्राजितस्य भगवान् आदित्यः सखाऽभवत्।

एकदा तु अम्भोधेस्तीरसंश्रयः सूर्यं सत्राजितस्तुष्टाव। तन्मनस्कतया च भास्वानभिष्टूयमानोऽग्रतस्तस्य तस्थौ। अस्पष्टमूर्तिधरं चैनमालोक्य सत्राजितः सूर्यमाह—यथैव व्योम्नि त्वां वह्निपिण्डोपममहमपश्यं तथैवाद्याग्रतो गतमपि, अत्र न किञ्चिद् भगवता प्रसादीकृतं विशेषमुपलक्षयामि।

इत्येवमुक्ते भगवता सूर्येण निजकण्ठादुन्मुच्य स्यमन्तकनामा मणिरवतार्य एकान्ते न्यस्तः। ततस्तमाताम्रोज्ज्वलह्रस्ववपुषम् ईषदापिङ्गलनयनमादित्यमद्राक्षीत्। कृतप्रणिपातस्तवादिकश्च सत्राजितमाह भगवान्—वरमस्मत्तोऽभिमतं वृणीष्वेति। स च तदेव मणिरत्नमयाचत। स चापि तस्मै तद् दत्त्वा वियति स्वं धिष्ण्यमारुरोह।

सत्राजितोऽप्यमलमणिरत्नसनाथकण्ठतया सूर्य इव तेजोभिरशेषदिगन्तराण्युद्भासयन् द्वारकां विवेश।

द्वारकावासिजन (पद) स्तु तमायान्तमवेक्ष्य, भगवन्तमनादिपुरुषं पुरुषोत्तमम् अवनिभारावतारणायांशेन मानुषरूपधारिणं प्रणिपत्याह—भगवन्! भगवन्तमयं नूनं द्रष्टुमायात्यादित्यः। इत्याकर्ण्य प्रहस्य च तानाह भगवान्—नायमादित्यः सत्राजितोऽयमादित्यदत्तं स्यमन्तकाख्यं महामणिं बिभ्रदत्रोपयाति। तदेनं विश्रब्धाः पश्यत, इत्युक्तास्ते ययुः।

स च तं स्यमन्तकाख्यं महामणिमात्मनिवेशने चक्रे। प्रतिदिनञ्च तन्मणिरत्नप्रवरमष्टौ कनकभारान् स्रवति।

अच्युतोऽपि तद्रत्नमुग्रसेनस्य भूपतेर्योग्यमेतदिति लिप्साञ्चक्रे, गोत्रभेदभयाच्च शक्तोऽपि न जहार।

सत्राजितोऽप्यच्युतो मामेतद् याचिष्यत्यवगतरत्नलोभ इति स्वभ्रात्रे प्रसेनाय तद्रत्नं दत्तवान्।

तच्च शुचिना ध्रियमाणमशेषसुवर्णस्रावादिकं गुणमुत्पादयति, अन्यथा य एव धारयति तमेव हन्तीति। असावपि प्रसेनः स्यमन्तकेन कण्ठासक्ते-

नाश्वमारुह्याटव्यां मृगयामगच्छत् । तत्र च सिंहाद् वधमवाप । साश्वञ्च तं निहत्य सिंहोऽप्यमलमणिरत्नमास्याग्रेणादाय गन्तुमुद्यत ऋक्षाधिपतिना जाम्बवता दृष्टो घातितश्च । जाम्बवानप्यमलं तन्मणिरत्नमादाय स्वबिलं प्रविवेश, सुकुमारकसंज्ञाय च बालकाय क्रीडनकमकरोत् ।

अनागच्छति च तस्मिन् प्रसेने "कृष्णो मणिरत्नमभिलषितवान् न च प्राप्तवान्, नूनमेतदस्य कर्म, नान्येन प्रसेनो हन्यत" इत्यखिल एव यदुलोकः परस्परं कर्णाकर्ण्यकथयत् ।

विदितलोकापवादवृत्तान्तश्च भगवान् यदुसैन्यपरिवारः प्रसेनाश्वपदवीमनुससार, ददर्श चाश्वसमेतं प्रसेनं निहतं सिंहेन । अखिलजनपदमध्ये सिंहपददर्शनकृतपरिशुद्धिः सिंहपदमनुससार ।

ऋक्षविनिहतञ्च सिंहमप्यल्पे भूमिभागे दृष्ट्वा ततश्च तद्रत्नगौरवादृक्षस्यापि पदान्यनुययौ । गिरितटे च सकलमेव यदुसैन्यमवस्थाप्य तत्पदानुसारी ऋक्षबिलं प्रविवेश । अर्द्धप्रविष्टश्च धात्र्याः सुकु-

२

मारकमुल्लापयन्त्या वाणीं शुश्राव—

सिंहः प्रसेनमवधीत् सिंहो जाम्बवता हतः।
सुकुमारक ! मा रोदीस्तव ह्येष स्यमन्तकः॥

इत्याकर्ण्य लब्धस्यमन्तकोदन्तोऽन्तःप्रविष्टः कुमारक्रीडनकीकृतश्च धात्रीहस्ते तेजोभिर्जाज्ज्वल्यमानं स्यमन्तकं ददर्श।

तञ्च स्यमन्तकाभिलाषचक्षुषमपूर्वं पुरुषमागतमवेक्ष्य धात्री त्राहि त्राहीति व्याजहार।

तदार्त्तनादश्रवणानन्तरञ्चामर्षपूर्णहृदयः स जाम्बवानाजगाम। तयोश्च परस्परं युध्यतो र्द्वयोर्युद्धमेकविंशतिं दिनान्यभवत्। ते च यदुसैनिकास्तत्र सप्ताष्टदिनानि तन्निष्क्रान्तिमुदीक्षमाणास्तस्थुः। अनिष्क्रममाणे च मधुरिपौ असाववश्यमत्र बिलेऽत्यन्तनाशमाप्तो भविष्यत्यन्यथा तस्य कथमेतावन्ति दिनानि शत्रुजये व्याक्षेपो भवतीति कृताध्यवसाया द्वारकामागता 'हतः कृष्ण' इति कथयामासुः। तद्बान्धवाश्च तत्कालोचितमखिलमुपरतक्रियाकलापं चक्रुः।

तत्र चास्य युध्यमानस्यातिश्रद्धादत्तविशिष्ट-पात्रोपयुक्तान्नतोयादिना कृष्णस्य बलप्राणपुष्टि-रभूत् ।

इतरस्यानुदिनमतिगुरुपुरुषभिद्यमानस्यातिनि-ष्ठुरप्रहारपीडिताखिलावयवस्य निराहारतया बल-हानिः। निर्जितश्च भगवता जाम्बवान् प्रणिपत्याह–असुरसुरयक्षगन्धर्वराक्षसादिभिरप्यखिलैर्भगवान् न जेतुं शक्यः किं पुनरस्मद्विधैरल्पवीर्यैर्नराभासैः, अवश्यं भगवतोऽस्मत्स्वामिनो नारायणस्य सकल-जगत्परायणस्यांशेन भगवता भवितव्यमिति ।

तस्मै भगवानखिलमवनिभारावतारमाचचक्षे । प्रीत्याऽञ्चितकरतलस्पर्शनेन चैनमपगतयुद्धखेदं चकार ।

स च प्रणिपत्यैनं पुनरपि प्रसाद्य जाम्बवतीं नाम कन्यां गृहागमनार्घ्यभूतां ग्राहयामास ।

स्यमन्तकमणिमप्यसौ प्रणिपत्य तस्मै प्रददौ । अच्युतोऽप्यतिप्रणतात् तस्मादग्राह्यमपि तन्मणि-रत्नमात्मशोधनाय जग्राह ।

सह जाम्बवत्या द्वारकामाजगाम । भगवदागमनोद्भूतहर्षोत्कर्षस्य द्वारकावासिजनस्य कृष्णावलोकनानुक्षणमेवातिपरिणतवयसोऽपि नवयौवनमिवाभवत् । आनकदुन्दुभिश्च दिष्ट्या दिष्ट्येति च सकलयादवाः स्त्रियश्च सभाजयामासुः ।

---

# चतुर्थः प्रपाठकः

## सेतुबन्धः

### नल उवाच

सेतुं कर्त्तुं समर्थोऽहममोघानुग्रहात् पितुः ।
आदिशाद्यैव बध्नामि सेतुं वानरपुङ्गवैः ॥१॥
ततो विसृष्टा रामेण सर्व्वतो हरिपुङ्गवाः ।
उत्पेतुस्ते महारण्यं हृष्टाः शतसहस्रशः ॥२॥
ते नगान् नगसङ्काशाः शाखामृगगणर्षभाः ।
बभञ्जुः पादपाँस्तत्र प्रचकर्षुश्च सागरम् ॥३॥
ते शालैश्चाश्वकर्णैश्च धवैर्वंशैश्च वानराः ।
कुटजैरर्जुनैस्तालैस्तिलकैस्तिनिशैरपि ॥४॥
बिल्वकैः सप्तपर्णैश्च कर्णिकारैश्च पुष्पितैः ।
नलस्यादेशमात्रेण सागरं समपूरयन् ॥५॥
समूलांश्च विमूलांश्च पादपान् हरिसत्तमाः ।
इन्द्रकेतून् इवोद्यम्य प्रजह्रुर्वानरास्तरून् ॥६॥

हस्तिमात्रान् महाकायाः पाषाणांश्च महाबलाः।
पर्व्वतांश्च समुत्पाट्य यन्त्रैः परिवहन्ति च ॥७॥
प्रक्षिप्यमाणैरचलैः सहसा जलमुद्धतम्।
समुत्ससर्प चाकाशमवासर्पत् ततः पुनः ॥८॥
समुद्रं क्षोभयामासुर्निपतन्तः समन्ततः।
आप्लवन्तः[1] प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ॥९॥
सूत्राण्यन्ये प्रगृह्णन्ति व्यायतं शतयोजनम्[2]।
दण्डान् अन्ये प्रगृह्णन्ति विचिन्वन्ति[3] तथापरे॥
नलश्चक्रे महासेतुमित्थं मध्ये नदीपतेः।
स तथा क्रियते सेतुर्वानरैर्घोरकर्मभिः॥
शिल्पिभिः शतशस्तत्र रामस्याज्ञापुरःसरैः ॥१०॥
मेघाभैः पर्व्वताग्रैश्च तृणैः काष्ठैश्च भूरिभिः।
पुष्पिताग्रैश्च तरुभिः सेतुं बध्नन्ति वानराः ॥११॥
पाषाणांश्च गिरिप्रख्यान् गिरीणां शिखराणि च।
दृश्यन्ते परिधावन्तो गृह्य[4] दानवसन्निभाः ॥१२॥

---

१. अपाणिनीयं परस्मैपदम्। २. अत्यन्तसंयोगे द्वितीया। ३. औत्तराधर्य्येण निवेशयन्ति। ४. विनापि प्रत्ययं पूर्वपदलोपोऽत्र द्रष्टव्यः; तथा च "संध्यावधूं गृह्य करेण भानुः" इति पातालविजये पाणिनिः।

स तथा क्रियते सेतुर्वानरैर्घोरकर्मभिः ।
शिल्पिभिः शतशस्तत्र रामस्याज्ञापुरस्सरैः ॥

शिलानां क्षिप्यमाणानां शैलानां च निपात्य[1]ताम्।
बभूव तुमुलः शब्दस्तदा तस्मिन् महोदधौ ॥१३॥
कृतानि प्रथमेनाह्ना योजनानि चतुर्दश ।
प्रहृष्टैर्गजसङ्काशैस्त्वरमाणैः प्लवङ्गमैः ॥१४॥
द्वितीयेन तथैवाह्ना योजनानि तु विंशतिः ।
कृतानि प्लवगैस्तूर्णं भीमकायैर्महाबलैः ॥१५॥
दिवसेन तृतीयेन योजनानि कृतानि तु ।
त्वरमाणैर्महाकायैरेकविंशतिरेव च ॥१६॥
चतुर्थेन तथा चाह्ना द्वाविंशतिरथापि च ।
योजनानि महावेगैः कृतानि त्वरितैस्तु तैः ॥१७॥
पञ्चमेन तथा चाह्ना प्लवगैः क्षिप्रकारिभिः ।
योजनानि त्रयोविंशत् सुवेलम्[2] अधिकृत्य वै ॥१८॥
स वानरवरः श्रीमान् विश्वकर्म्मात्मजो बली ।
बबन्ध सागरे सेतुं यथा चास्य पिता तथा ॥१९॥
स नलेन कृतः सेतुः सागरे मकरालये ।
शुशुभे सुभगः श्रीमान् स्वातीप[3]थ इवाम्बरे ॥२०॥

---

१. अपाणिनीयं परस्मैपदम् । २. अत्र सामीप्येऽव्ययीभावः, वेलायाःसमीपमित्यर्थः । ३. छायापथ इत्यर्थः; cf. रघुवंश, XIII. 2.

ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
आगम्य गगने तस्थुर्द्रष्टुकामास्तदद्भुतम् ॥२१॥
दशयोजनविस्तीर्णं शतयोजनमायतम् ।
ददृशुर्देवगन्धर्वा नलसेतुं सुदुष्करम् ॥२२॥
आप्लवन्तः प्लवन्तश्च गर्जन्तश्च प्लवङ्गमाः ।
बध्नन्तः सागरे सेतुं जग्मुः पारं महोदधेः ॥२३॥
विशालः सुकृतः श्रीमान् सुभूमिः सुसमाहितः ।
अशोभत महान् सेतुः सीमन्त इव सागरे ॥२४॥
ततः पारे समुद्रस्य गदापाणिर्विभीषणः ।
परेषामभिघातार्थमतिष्ठत् सचिवैः सह ॥२५॥
सुग्रीवस्तु ततः प्राह रामं सत्यपराक्रमम् ।
आरोह त्वं हनूमन्तम् अङ्गदं त्वथ लक्ष्मणः ॥२६॥
अयं हि विपुलो वीर ! सागरो मकरालयः ।
वैहायसौ युवामेतौ वानरौ धारयिष्यतः ॥२७॥
अग्रतस्तस्य सैन्यस्य श्रीमान् रामः सलक्ष्मणः ।
धन्वी जगाम धर्म्मात्मा सुग्रीवेण समन्वितः ॥२८॥
अन्ये मध्येन गच्छन्ति पार्श्वतोऽन्ये प्लवङ्गमाः ।
सलिले प्रपतन्त्यन्ये मार्गमन्ये न लेभिरे ॥२९॥

केचित् वैहायसगताः सुपर्णा इव पुप्लुवुः ॥३०॥
घोषेण महता तस्य सिन्धोर्घोषं समुच्छ्रितम् ।
भीममन्तर्दधे[1] भीमा तरन्ती हरिवाहिनी ॥३१॥
वानराणां हि सा तीर्णा वाहिनी नलसेतुना ।
तीरे निविविशे[2] राज्ञा बहुमूलफलोदके ॥३२॥

——

१. तिरोहितवती । २. निवेशिता ।

# पञ्चमः प्रपाठकः

## मोहमदीयानां भारते प्रवेशः

धैर्येण, प्रसादेन, प्रतापेन, तेजसा, वीर्येण, विक्रमेण, शान्त्या, श्रिया, सौख्येन, धर्म्मेण, विद्यया च सममेव परलोकं सनाथितवति तत्रभवति वीरविक्रमादित्ये शनैः शनैः पारस्परिकविरोध-विशिथिलीकृतस्नेहबन्धनेषु राजसु, भामिनी भ्रूभङ्गभूरिभावप्रभावपराभूतवैभवेषु भटेषु, स्वार्थ-चिन्तासन्तानवितानैकतानेष्वमात्यवर्गेषु, प्रशंसा-मात्रप्रियेषु प्रभुषु, इन्द्रस्त्वं वरुणस्त्वं, कुबेरस्त्व-मिति वर्णनामात्रसक्तेषु बुधजनेषु, कश्चन गजिनी-स्थाननिवासी महामदो यवनः ससेनः प्राविशद् भारते वर्षे । स च प्रजा विलुण्ठ्य मन्दिराणि निपात्य, प्रतिमा विभिद्य, परःशतान् जनांश्च दासी-कृत्य, शतशः उष्ट्रेषु रत्नान्यारोप्य स्वदेशमनैषीत् । एवं स ज्ञातास्वादः पौनःपुन्येन द्वादशवारमागत्य

भारतमलुलुण्ठत्। तस्मिन्नेव च स्वसंरम्भे एकदा गुर्जरदेशचूडायितं सोमनाथतीर्थमपि धूलीचकार। अद्य तु तत्तीर्थस्य नामापि केनापि न स्मर्यते परं तत्समये तु लोकोत्तरं तस्य वैभवमासीत्। तत्र हि महार्हवैदूर्य[1]पद्मरागमाणिक्यमुक्ताफलादिजटितानि कपाटानि, स्तम्भान्, गृहावग्रहणी[2]र्भित्तीर्वलभी[3]विटङ्कानि[4] च निर्मथ्य रत्ननिचयमादाय शतद्वयमणसुवर्णशृङ्खलावलम्बिनीं चञ्चाकचक्य[5]चकितीकृतावलोचकलोचननिचयां महाघण्टां प्रहृत्य महादेवमूर्तावपि गदामुदतूतुलत्। अथ "वीर! गृहीतमखिलं वित्तं, पराजिता आर्यसेनाः, वन्दीकृता वयं, सञ्चितममलं यशः इतोऽपि न शाम्यति ते क्रोधश्चेदस्मांस्ताडय, मारय, छिन्धि, भिन्धि, पातय, मज्जय, खण्डय, कर्तय, ज्वलय, किन्तु त्यजेमामकिञ्चित्करीं जडां महादेवप्रतिमाम्। यद्येवं न

---

१. विडालाक्षम्, लहसनिया। २. देहलीः। ३. cf. बँड़ेर। ४. कपोतपालिकाः, ढबली। ५. cf. चकाचक; चमक।

स्वीकरोषि तद् गृहाणास्मत्तोऽन्यामपि सुवर्णकोटिद्वयीं त्रायस्व मैनां भगवन्मूर्त्तिं स्प्राक्षी" रिति साम्रेडं कथयत्सु रुदत्सु पतत्सु विलुण्ठत्सु प्रणमत्सु च पूजकवर्गेषु "नाहं मूर्त्तीर्विक्रोणे किन्तु भिनद्मि" इति संगर्ज्य जनताया हाहाकारकलकलमाकर्णयन् घोरगदया मूर्त्तिमतुत्रुटत् गदापातसमकालमेव चानेकार्बुदपद्मसुद्रामूल्यानि रत्नानि मूर्त्तिमध्यादुच्छलितानि परितोऽवाकीर्यन्त। स च दग्धमुखस्तानि मूर्त्तिखण्डानि च क्रमेलकपृष्ठेष्वारोप्य सिंधुनदीमुत्तीर्य स्वकीयां विजयध्वजिनीं गजिनीं नाम राजधानीं प्राविशत्।

अथ कालक्रमेण सप्ताशीत्युत्तरसहस्रतमे १०८७ वैक्रमाब्दे सशोकं सकष्टं च प्राणांस्त्यक्तवति महामदे गोरदेशवासी कश्चित् शहाबुद्दीननामा प्रथमं गजिनीदेशमाक्रम्य महामदकुलं धर्मराजलोकाध्वनीनं विधाय सर्वाः प्रजाश्च पशुमारं मारयित्वा तद्रुधिरार्द्रमृदा गोरदेशे बहून् गृहान् निर्माय चतुरङ्गिण्याऽनीकिन्या भारतवर्षं प्रविश्य

शीतलशोणितानप्यसयन्[1] पञ्चाशदुत्तरद्वादशशत-मितेऽब्दे दिल्लीमश्वयाम्बभूव[2]।

ततो दिल्लीश्वरं पृथ्वीराजं कान्यकुब्जेश्वरं जयचन्द्रं च पारस्परिकविरोधज्वरग्रस्तं विस्मृत-राजनीतिं भारतवर्षदुर्भाग्यायमानमाकलय्याऽनाया-सेनोभावपि विशस्य वाराणसीपर्य्यन्तमखण्डमण्ड-लमकण्टकमकीटकिट्टं महारत्नमिव महाराज्यमङ्गी-चकार तेन वाराणस्यामपि बहवोऽस्थिगिरयः प्रचिताः, रिङ्गत्तरङ्गभङ्गा गङ्गापि शोणितशोणा शोणीकृता[3], परःसहस्राणि च देवमन्दिराणि भूमिसात्कृतानि।

स एव प्राधान्येन भारते यावनराज्याङ्करा-रोपकोऽभूत्। तस्यैव च कश्चित् क्रीतदासः कुतु-बुद्दीननामा प्रथमो भारतसम्राट् संजातः॥

---

१. असिभिर्घातयन्। २. अश्वैरतिचक्राम। ३. शोणनदवत् कृता।

## षष्ठः प्रपाठकः

### आपदि शत्रुणापि सन्धिः कार्यः

बहूनां गोचरं यातो वैरिणां विषमे स्थितः ।
कुर्याद्बलाधिकं तेभ्यो मित्रं किंत्वतिशङ्कितः ॥
न्यग्रोधमूलनिलयः प्रलयो मूषिकः पुरा ।
लोमशं नाम मार्जारं जालबद्धं व्यलोकयत् ॥
बद्धे तस्मिन् गताशङ्कः सजिघ्रंश्चपलाननः ।
भक्ष्यं निशि चचाराखुर्विलिखन्नखरैर्महीम् ॥
हरितं नाम सोऽपश्यन्नकुलं लोहिताननम् ।
चन्द्रकाख्यमुलूकं च कूजन्तं घोरलोचनम् ॥
तौ दृष्ट्वा बलिनौ भीतः संप्राप्ते प्राणसंशये ।
मूषिकः कलयन्सर्वा दिशः क्षणमचिन्तयत् ॥
नकुलोलूकभीतोऽहं मार्जारं बलिनां वरम् ।
संश्रये, विषमस्थानां संधिस्त्राणं हि शत्रुणा ॥
स निश्चित्येति तत्पाशच्छेदायोद्यतमानसः ।
मार्जारमवदन्नीलकाचका[१]चरलोचनम् ॥

---

१. काचवद्भास्वर—।

अमित्रो मित्रतां याति मित्रमायात्यमित्रताम् ।
कालेन तस्माच्छेत्स्यामि पाशं ते मित्रतां गतः ॥
श्रुत्वैतन्मधुरं हृष्टो मार्जारः सुहृदं व्यधात् ।
गाढमङ्के परिष्वज्य मूषिकं विपदि स्थितः ॥
तद्दृष्ट्वा नकुलोलूकौ निराशावाखुभक्षणे ।
बभूवतुर्भुग्नमुखौ बलवत्प्रीतिशङ्कितौ ॥
शनैः शनैर्मूषिकोऽथ चिच्छेद स्नायुबन्धनम् ।
तं तूर्णं तूर्णमित्यूचे मार्जारश्चिरकारिणम् ॥
स्वार्थमुद्दिश्य लम्बन्ते ये क्षणं प्रीतितन्तुभिः ।
धूर्तास्तान्कार्यशेषेण यापयेत्कार्ययाचकान् ॥
एतज्ज्ञात्वा धियैवाखुर्लुब्धकागमनावधि ।
एकपाशांशशेषं तं चकार नयकोविदः ॥
प्रातर्घोरतरे प्राप्ते चण्डाले परिघाभिधे ।
जालनिक्षिप्तनयने सशस्त्रे पाशजीविनि ॥
पाशशेषं चकर्ताखुश्छित्त्वा च बिलमाविशत् ।
याते व्याधो निराशश्च मार्जारे विद्रुते द्रुतम् ॥
तस्मान्महाभयान्मुक्तः कालेनाभ्येत्य मूषिकम् ।
अन्तःस्थितं बिलद्वारान्मार्जारः प्रणतोऽवदत् ॥

अहं स ते परं मित्रमुपकारवशीकृतः ।
भृशमुत्कण्ठितां प्राप्तः सखे निर्गम्यतामितः ॥
इति ब्रुवाणं मार्जारं दृष्ट्वा भक्षणदीक्षितम् ।
शुक्लतीक्ष्णाग्रदशनं श्मश्रुसूचीचिताननम् ॥
जिघ्रन्तं मूषिकामोदमर्धोन्मीलितलोचनम् ।
उच्चैकपादनिभृतं तमभाषत मूषिकः ॥
सौहार्देनोपयुक्तः प्राक्तव चाहं भवांश्च मे ।
गम्यतां स गतः कालो न भूमिर्वञ्चनेष्वहम् ॥
यद्भवान्मधुरं वक्ति तन्मह्यं नाद्य रोचते ।
याचकः कार्यकालोऽसावधुना नास्ति संगतम् ॥
निजप्रयोजनापेक्षापेशलप्रियभाषणम् ।
दुर्बलः क्रूरमनसं धीरः को नाम विश्वसेत् ॥
कृतज्ञो भव सन्मित्रं दूरादेवार्यचेतसा ।
न श्रेयोऽस्ति विरुद्धे हि भोज्यभोक्तृसमागमे ॥
निरस्य बहुभिर्वाक्यैर्मार्जारमिति मूषिकः ।
बिलं तत्याज कालेन दृष्टं धूर्तेन शत्रुणा ॥

---

# सप्तमः प्रपाठकः

## द्रोणकथा ( आचार्यत्वप्राप्तिपर्यन्ता )

पुरा किल भरद्वाजो नाम कश्चिद् द्विज आसीत्। स आत्मनः पुत्रं द्रोणं धनुर्वेदाध्ययनार्थं महर्षेरग्निवेशस्य सकाशेऽस्थापयत् । द्रोणोऽपि संशिते ब्रह्मचर्ये स्थितो विनीतात्मा जटिलवृत्तिर्बहुलाः समा गुरुशुश्रूषणे रतोऽभवत् ।

भरद्वाजस्य सखा पृषतो नाम पञ्चालानामधिप आसीत् । तेनापि स्वतनुजो द्रुपदस्तामेव विद्यामधिजिगांसुस्तस्यैव गुरोः सकाशं प्रेषितः । अथ तत्र सुचिरं वसतोस्तयोर्द्रोणद्रुपदयोर्बाल्यात् प्रभृति सहाध्ययनं कुर्वतोरेकत्रैव च क्रीडतोः परं सख्यमजायत।

एकदा प्रियवादी द्रुपदो द्रोणं प्रीणयितुकाम एवमब्रवीत् । वयस्य ! सत्येन त इदं शपे यत् पित्रा राज्येऽभिषिक्तोऽहं त्वया सह विविधान् भोगान् भोक्ष्ये । सकलमप्यात्मनो वित्तं त्वदधीनं करिष्यामि।

तव वचने स्थास्यामि। त्वां च प्राणेभ्योऽपि प्रियं गणयिष्यामीति।

अथ गच्छता कालेन द्रुपदः कृतास्त्रः स्वभवनं गतः। द्रोणोऽपि पितुर्नियोगेन दारपरिग्रहं कृत्वा दारिद्र्यदुःखेन पीडितः कथञ्चित् कालं नीतवान्। पितृनिधनेनानाथो द्रुपदस्य वाक्यं मनसा धारयन्नपि न तस्यालयं जगाम।

एकदा द्रोणस्य तनयोऽश्वत्थामा कस्यचिद् धनिकस्य गृहं तत्पुत्रकैः सह क्रीडितुं ययौ। तत्र धनिकपत्न्या क्रीडावसाने स्वपुत्रेभ्यो गोक्षीरं दत्तम्। अश्वत्थामा तु तदलभमानो बालभावात् तत्प्राशने संजातस्पृहो गृहमागत्य रुदंस्तथौ। मात्रा बहुशः सान्त्वितोऽपि रोदनान्न विरराम। द्रोणोऽपि रोदन-कारणं परिज्ञाय दिङ्मोहमिवोपगतः पयस्विनीं प्रतिग्रहेणाधिगन्तुमभिलषन् देशाद्देशं पर्यभ्रमत्। परं दैववशाद् गां न लेभे।

अथ द्रोणे निराशतया गृहं प्रतिनिवृत्तेऽश्वत्थामा पुनरपि क्षीरं मे तात देहीति वदन् रोदितुं प्रचक्रमे।

द्रोणस्तस्मै पिष्टोदकं ददौ। अश्वत्थामापि पिष्टरसं पिबंस्तद्धावल्येन वञ्चितः क्षीरमेवात्मना पीयत इति मन्वानो हर्षान्ननर्त।

एकदा ते धनिकसुता द्रोणसदनमागता अश्वत्थामानं क्षीरधिया पिष्टोदकं पिबन्तं हर्षेण च नृत्यन्तमवलोक्याब्रुवन्। मूर्ख! नेदं क्षीरम्। पिष्टोदकमिदं त्वया पीयते। धिक् ते पितरं योऽधनस्तुभ्यं क्षीरं न यच्छति प्रत्युत त्वामेवं प्रतारयति। त्वमपि मन्दात्मा मुदा नृत्यसीति।

एवमात्मानं च पुत्रं च हास्यतामुपगतौ दृष्ट्वा द्रोणो दूयमानमानसो व्यचिन्तयत्। अहो धिगियं दरिद्रता। कथं कथमपि कुटुम्बोदरपूरणं कुर्वे। निर्धनोऽयमिति कुमारा अप्येते मां गर्हयन्ति। अद्य यावन्न मया धनलिप्सया पापिष्ठा परोपसेवा विहिता।

परं पुत्रप्रियतया नेत ऊर्ध्वं व्रतमिदं पालयितुमुत्सहे। तस्माद् बाल्यात्प्रभृति रूढसौहृदस्य द्रुपदस्य सेवया धनं लब्ध्वा कृतार्थो भवेयम्। सोऽपि

पित्राऽचिरादेव राज्येऽभिषिक्तः पूर्वस्नेहं स्मरन् न मां विहास्यतीति।

एवं संप्रधार्य द्रोणः सदारः पुत्रमादाय सौभक्तिं समुपागमदेवं चावोचत्–राजन्! सखाहं ते द्रोणः। दारिद्र्यदुःखपीडितस्तवान्तिकमागतोऽस्मि तदात्मनो वचनमनुपालयन् दूरीकुरु व्यसनमिदं ममेति।

द्रुपदस्त्वैश्वर्यमदसंपन्नस्तत्तस्य वचनममृष्यन् कषायीकृतलोचनो विजिह्मभ्रूरेवमब्रवीत्—

अकृतेयं तव प्रज्ञा नूनं नातिसमञ्जसा।
यदात्थ मां त्वं प्रसभं सखा तेऽहमिति द्विज॥
नहि राज्ञामुदीर्णानामेवंभूतैर्नरैः क्वचित्।
सख्यं भवति मन्दात्मन् श्रिया हीनैर्धनच्युतैः॥
न दरिद्रो वसुमतो नाविद्वान् विदुषः सखा।
न शूरस्य सखा क्लीबस्तत्कथं सख्यमावयोः॥
ययोरेव समं वित्तं ययोरेव समं श्रुतम्।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः॥

तद् गच्छ मूढ! न ते किञ्चिदपि दास्यामि। अथवा वसैकरात्रम्। भोजनं कृत्वा प्रातर्याहीति।

अथ स प्रतापवान् भारद्वाजो द्रुपदेनैवमुक्तो मन्युनाभिपरिप्लुतस्तत्क्षणादेव ततो निर्गत्य द्रुपद-पराभवोपायं कंचिन्मनसा विनिश्चित्य तत्साधनार्थ-मवसरलिप्सया कुरुनगरसमीपे गौतमस्य निवेशने कञ्चित् कालं प्रच्छन्नमवसत् ।

एकदा कुरुकुमाराः समेता गजसाह्वयान्नगरा-न्निष्क्रम्य वीटया[1] क्रीडन्तो भारद्वाजावसथस्य सविधे व्यचरन् । तदा तेषां तत्र क्रीडतां सा वीटा कूपे निपपात । तेऽप्यादृता वीटामुद्धर्तुं यत्नमातिष्ठन् । परं तदुपलब्धये कमप्युपायं समीचीनमपश्यन्तः केवलं व्रीडयाऽवनताननाः अन्योन्यमवैक्षन्त ।

अथ द्रोणो दूरत एव निखिलमिदं वृत्तं दृष्ट्वानवसरोऽयमात्मनः कौशलं प्रदर्शयितुमिति कृत्वा तान् भग्नोत्साहान् कुमारानभ्येत्य मन्दं प्रहस्या-ब्रवीत् । अहो धिग्वो बलं क्षात्त्रं धिगेतां वः कृता-स्त्रतां ये भरतस्यान्वये जाता अपि वीटामेतां कूपा-

---

१. वीटा = वितस्तिप्रमाणं काष्ठखण्डं यद्दण्डेन ताडयित्वा खेल्यते बालैः । गुल्ली ; cf. वीटी दाँडू चा खेळ-मराठी ।

दुद्धर्तुं न शक्नुथ। पश्यतैदानीं मदस्त्रसामर्थ्यम्। इयं मे मुद्रिका मयाऽस्मिन्निरुदके कूपे क्षिप्यते। इमां च वीटां चापि युष्मत्समक्षमिषीकाभिरेवोद्धरेयम्। इत्युक्त्वा द्रोणो वीटामिषीकयैकया ऽस्त्रेणाभिमन्त्रितया बिभेद। तामिषीकामन्यया बिभेद। तामपि तृतीयया तृतीयां तुर्ययेत्येवं क्रमेण बहूनामिषीकाणां समायोगे वीटामग्रहीत्। ततश्च तामात्मक्षिप्तां मुद्रिकामपि समुज्जहार।

इदं द्रोणस्याद्भुतं कर्मावेक्ष्य ते कुमारा विस्मयोत्फुल्ललोचना आश्चर्यमाश्चर्यमिति वदन्तो द्रोणमभिवाद्य कोऽसि ब्रह्मन्! कुत आयातोऽसि, किं वयं तव प्रियं करवामहा इत्यादीन् प्रश्नान् परिपृच्छय द्रोणवचनाद् हस्तिनापुरं प्रतिनिवृत्य भीष्माय तद्रूपगुणकर्माणि निवेदयामासुः। भीष्मोऽपि युक्तरूपोऽयं गुरुः कुमाराणामिति विचिन्त्य परमसत्कारपूर्वकं द्रोणमानाय्य तस्मै विविधानि वस्तूनि दत्त्वा सर्वानपि कुमाराञ् शिष्यत्वेन समर्पयामास।

१. काशैः।

पाण्डवान् धार्त्तराष्ट्रांश्च शिष्यत्वेन प्रतिगृह्य शस्त्रास्त्र-विद्यामध्यापयामास ।

एवं भीष्मेण संपूजितो द्रोणो धनधान्यसमाकुले सुपरिच्छन्ने गृहे ससुतदारः सुखेन निवसन् पाण्डवान् धार्तराष्ट्रांश्च शिष्यत्वेन प्रतिगृह्य शस्त्रास्त्रविद्यामध्यापयामास । अन्येऽपि बहवो राजानो राजपुत्राश्चास्त्रविद्यामधिजिगांसवो द्रोणमुपतस्थुः ।

---

# अष्टमः प्रपाठकः

## शुकस्यात्मचरितप्रस्तावना

इति पृष्टः क्षितीशेन बहुमानपुरःसरम् ।
क्षणं बुद्ध्याऽनुसंधाय शुको वक्तुं प्रचक्रमे ॥
देव विन्ध्याटवी तावत्तव श्रुतिपथं गता ।
पूर्वापरपयोराशिवेलासंस्पर्शशालिनी ॥
यदेकदेशे कण्डूलगण्डेभदलितद्रुमे ।
उषितौ दण्डकारण्ये ससीतौ रामलक्ष्मणौ ॥
यत्रागस्त्यमुनेरासीदाश्रमः शमिनां मतः ।
लोपामुद्राकराक्षिप्तजलसंवर्धितद्रुमः ॥
तस्योपकण्ठे पम्पाख्यमस्ति पुण्यजलं सरः ।
सीताकरतलोल्लूनश्रवणाभरणोत्पलम् ॥
तस्यास्ति पश्चिमे तीरे जीर्णः शाल्मलिपादपः ।
आरोहपरिणाहाभ्यां व्याप्तव्योमदिगन्तरः ॥
तस्मिन् कृतकुलायानि वीतभीतीनि दुर्गमे ।
विहंगमसहस्राणि निवसन्ति निरन्तरम् ॥

दिवा तान्यभिनिर्वर्त्य प्राणयात्रामितस्ततः ।
तत्रागत्य स्वनीडेषु सुखं रात्रिषु शेरते ॥
तत्रैव बद्धवसती अभूतां पितरौ मम ।
जातोऽहमेकस्तनयस्तयोर्वयसि पश्चिमे ॥
उद्वोढुमसमर्था सा तीव्रां प्रसववेदनाम् ।
तयैव पञ्चतां नीता जननी मे दुरात्मनः ॥
जायावियोगदग्धोऽपि तातः पुत्रैषणातुरः ।
शोकमुत्सृज्य मत्प्राणपोषणे यत्नमग्रहीत् ॥
न शशाक क्वचिद् गन्तुमात्मनः प्राणवृत्तये ।
मां वक्षसि निधायास्त नीड एव दिवानिशम् ॥
अन्यपत्ररथानीतभुक्तोज्झितफलादिना ।
मदाप्यायनशिष्टेन सोऽकरोद्वृत्तिमात्मनः ॥
अतिक्रामति कालेऽथ किंचिदुद्भिन्नपक्षतौ ।
तातवक्षःस्थलस्थेऽपि मय्युड्डयनलालसे ॥
अकस्मादेव संभ्रान्तमृगपक्षिकुलश्रुतः ।
अभूत्कलकलस्तस्मिन्नरण्ये यमदुन्दुभिः ॥
ततस्तातोरसः किंचिदुन्नमय्य शिरोधराम् ।
कुतूहलवशाच्चक्षुर्दिक्षु निक्षिप्तवानहम् ॥

अथापश्यमसंख्यातकिरातपरिवारितम् ।
वने शबरसेनान्यमायान्तं मृगयारसात् ॥
ततो मृतमिवात्मानमुत्खातमिव शाल्मलिम् ।
परिवृत्तमिवारण्यं भयेनाहमचिन्तयम् ॥
हतप्राणिसहस्राङ्गस्रवद्रुधिरचर्चितैः ।
मुहूर्तादेव तद्व्याधैरथारण्यमपूर्यत ॥
सेनापतिः स निस्त्रिंशो[1] मृगयाजनितश्रमः ।
निषसाद ततः पम्पासरसस्तीरशाद्वले ॥
क्षणं विश्रम्य पीत्वापः प्राश्य बालमृणालिकाः ।
पुलिन्दैः सह सेनानीः स जगाम यथागतम् ॥
एको जरत्पुलिन्दस्तु पापस्तत्र व्यलम्बत ।
प्रांशुर्भयंकराकारः कृतान्तस्येव किंकरः ॥
अजातपिशितप्राप्तिरनुभूतवृथाश्रमः ।
यमदूतीमिव दृशं स ददौ तत्र शाल्मलौ ॥
स दुरारोहतां तस्य जानन्नपि महातरोः ।
जातानध्यवसायोऽपि यत्नमारोहणेऽकरोत् ॥
अथाहमसमत्रासविपर्यासितमानसः ।

१. क्रूरः ।

अविशं पितुरुत्सङ्गं तत्पक्षावृतविग्रहः ॥
स तु पापस्तमारुह्य तरुं नीडनिवासिनः ।
हत्वा हत्वा यथाशक्ति शुकान्भूमावपातयत् ॥
क्रमेण स दुराचारस्तातस्यापि शिरोधराम् ।
बभञ्ज तं च चिक्षेप क्षितौ विगतजीवितम् ॥
तदा मम न तच्छोको नान्यत्किंचिच्च चेतसि ।
केवलं सहजातेन भयेनैवास्मि विप्लुतः ॥
ततोऽहं पितुरुत्सङ्गाद्विनिर्गत्य ससाध्वसम् ।
अन्तरं तरुशीर्णानां पर्णानां तूर्णमाविशम् ॥
पापः सोऽप्यवरुह्याथ शाल्मलेर्मूलवर्तिनः ।
शुकान्गतासूनादाय व्याधाननुसरन्नगात् ॥
अहं विधिनियोगात्तु तेन दुष्कृतकारिणा ।
जीर्णपर्णसवर्णत्वात्तदानीं नावधारितः ॥
ततो दूरमतिक्रान्ते तस्मिन्दारुणकर्मणि ।
संजातजीविताशं मां पिपासा पर्यबाधत ॥
अनुड्डयनसामर्थ्यात्पद्भ्यामेव यथातथा ।
पम्पापुलिनपर्यन्तं गन्तुमैच्छं पिपासितः ॥
तथाप्यतिनिरुत्साहः पतन्मुहुरितस्ततः ।

तमेव पापकर्माणं शङ्कमानः पदे पदे ॥
चिरं हा तात तातेति शोचन्कण्ठान्तवर्तिभिः ।
प्राणैरायास्यमानोऽहमतिष्ठमतिनिष्ठुरः ॥
तस्मादनतिदूरेऽस्ति सरसस्तपसां निधेः ।
निर्धूतक्लेशजालस्य जाबालेराश्रमो मुनेः ॥
ततस्तस्मिन् सुतस्तस्य सरसि स्नातुमागतः ।
हारीतनामा मां तत्र तदवस्थं व्यलोकयत् ॥
कष्टं केनापि पापेन पातितः शुकशावकः ।
कुलायात् क्लाम्यतीत्युक्त्वा कृपया मां करेऽग्रहीत् ॥
अपाययत् पयोविन्दून्मरुताश्वासयन् मुहुः ।
कृताह्निकश्च कारुण्यादनयत् पितुराश्रमम् ॥
समाश्वसन्तस्य हारीततातं दृष्ट्वैव पश्यतः ।
पदं स्थिरमिव न्यस्तं हृदि मे जीविताशया ॥
नीडच्युतोऽयमानीतो मया विहगपोतकः ।
इति पित्रे प्रणम्यासौ पाणिस्थं मामदर्शयत् ॥
अथ जाबालिमद्राक्षं साक्षादिव पितामहम् ।
महात्मभिः परिवृतं सानुकम्पैस्तपोधनैः ॥
जराधवलमूर्धानं धाम्ना प्रसरता बहिः ।

अनतिस्फुटसंलक्ष्यशरीरावयवाकृतिम् ॥

स तु मां क्षणमुद्वीक्ष्य स्मयमान इवावदत् ।
इदं हि भुज्यतेऽनेन फलं स्वस्यैव कर्मणः ॥

त्रिकालदर्शी भगवान् स हि दिव्येन चक्षुषा ।
विश्वं पश्यति पाणिस्थबदरामलकादिवत् ॥

वचस्तदाकर्ण्य कुतूहलाकुलाः,
समेत्य सर्वे मुनयस्तमब्रुवन् ।
बभूव कोऽयं भगवन् भवान्तरे,
किमस्य वा दुश्चरितं तदुच्यताम् ॥

---

# नवमः प्रपाठकः

## मन्दारवतीपरिणयः

अस्ति कालिन्दीतटे ब्रह्मस्थलाभिधः कश्चिदग्रहारः। तत्र अग्निस्वामीति समभवत् कश्चिद्वेदपारगो विप्रः। तस्यातिरूपवती मन्दारवती नाम कन्यका समजनि।

अथ शैशवातिक्रान्तायां तस्यां कान्यकुब्जात् सर्वगुणोपेताः त्रयो ब्राह्मणसूनवः समाययुः। तेषामेकैक आत्मार्थम् तत्पितरमयाचत तामनवद्याङ्गीमबलाललामभूताम्। ततस्तत्पिता प्राणव्ययेऽपि तामन्यस्मै दातुमनिच्छन् तन्मध्यादेकस्मै दातुं मतिमकरोत्। सातु कन्यका अन्ययोर्बाधाद् भीता कियन्तमपि कालं न पाणिमग्राहयत्। ते च त्रयोपि तस्या मुखेन्दुनिविष्टदृष्टयश्चकोरव्रतमालम्ब्य दिवानिशन्तत्रैव तस्थुः।

अथैकदा समुत्पन्नेन ज्वरदाहेनार्त्ता सा मन्दारवती पञ्चत्वमवाप। ततस्ते विप्रकुमारास्तां परासुं

दृष्ट्वा शोकार्त्ताः कृतप्रसाधनां श्मशानं नीत्वाऽग्निसाच्चक्रुः। ततश्च तेषामेकतमस्तत्र मठं निर्माय भैक्ष्येण जीवन् तद्भस्मशय्यायामतिष्ठत्। द्वितीयोऽस्थीनि तस्या उपादाय जगाम निक्षेप्तुं भागीरथ्याम्। तृतीयस्तु भूत्वा तापसो देशान्तराणि भ्रमति स्म। स च भ्राम्यन्नेकदा वज्रलोकाभिधं ग्रामं प्राप्य कस्यापि विप्रस्य गृहेऽतिथिरभूत्। तेन च गृहपतिना पूजितो यावत् तत्र प्रावर्त्तत भोक्तुम् तावत् शिशुरेकस्तस्य रोदितुं प्रवृत्तोऽभवत्। स च शिशुः समाश्वास्यमानोऽपि यदा न व्यरंसीत् रोदनात् तदाऽस्य गृहिणी क्रुधा तं बाहावादाय न्यक्षिपज्ज्वलत्यग्नौ। निक्षिप्त एवासौ कोमलाङ्गस्तत्क्षणात् भस्मसाद्बभूव। तच्चावलोक्यासावतिथिः सञ्जातरोमाञ्चः प्रोवाच। हा धिक् कष्टम्! प्रविष्टोऽहं ब्रह्मराक्षसवेश्मनि। तस्मान्मूर्त्तमिव किल्विषमन्नमिदन्नाधुना भक्षयिष्यामि। एवं वादिनं तमतिथिं स गृहस्थः प्रत्यवादीत् ब्रह्मन्! पश्य मे पठितसिद्धां मृतसञ्जीवनीं शक्तिम्। इत्युक्त्वा पुस्तकमुद्घाट्य अनुवाच्य च प्राक्षिपत्

जलं तस्मिन् भस्मनि । क्षिप्तमात्रे च सलिले जीवन्नुदतिष्ठत् स सुतस्तथैव । ततः सोऽतिथिः सुनिर्वृत्तस्तत्र सहर्षम् बुभुजे। गृहस्थोऽपि नागदन्तके पुस्तकमवस्थाप्य भुक्त्वैव तेनातिथिना सह रात्रौ शयनमभजत् ।

अथ सुप्ते गृहपतौ सोभ्यागतः स्वैरमुत्थाय शङ्कितः स्वप्रियाया मन्दारवत्या जीवितार्थन्तदग्रहीत्पुस्तकम् । गृहीत्वैव तस्मान्निर्गत्य गृहात् रात्रिन्दिवं व्रजन्नुपागमत् तां श्मशानभूमिम्। अद्राक्षीच्च सहसा तं द्वितीयमप्युपस्थितम् गङ्गाम्भसि तदस्थि क्षेप्तुं गतवन्तम् । प्राप्त एव च तत्रावलोकत निबद्धमठं तस्या भस्मनि शयितं तृतीयम्। अवदच्च—त्यज्यतां मठिका भ्रातर्जीवयेयं प्रियामिमाम् इति, ततस्ताभ्यां सनिर्बन्धं प्रार्थितः पुस्तकमुद्धाट्यानुवाच्य च मन्त्रपूता अपः प्राक्षिपत् तत्र भस्मनि ।

अथ प्रोक्षितमात्रेषु विन्दुषु सहसा समुत्तस्थौ जीवन्ती सा मन्दारवती । उत्थिता च वह्निं प्रणम्य पूर्वाधिकद्युति निष्टप्तकाञ्चनेनेव निर्मितं वपुर्बभार ।

तत आलोक्य तां तादृशीम् त्रयोऽपि ते तत्प्राप्तये परस्परं कलहायन्ते स्म ।

एको वदति–मन्मन्त्रबलाज्जीवितैषा ममैव भार्या। अपरो भणति–मदीयेन तीर्थभ्रमणपुण्येन जीवितेयम् ममैव भार्या भवितुमर्हति । तृतीयश्च गदति— रक्षितानि मया यत्नतो भस्मानि, ततएवेयं जीविता, तस्मान्ममैवेयम् प्रणयिनी ।

एवं विवदमानास्त्रयोऽपि सह तया वामलोचनया मन्दारवत्या गत्वा नरपतेर्विक्रमार्कस्यान्तिकम् न्यवेद-यन् सर्वमेव तं वृत्तान्तं,प्रार्थयन्त च विवादनिर्णयम्। महीपतिश्च तत्सर्वमालोच्य प्रोवाच–भोः कार्यार्थिनः! योऽयम् भवतां क्लेशमपारमनुभूय चौर्येणानीय पुस्तकं मन्त्रैरजीवयदिमां कुमारीम् स खलु पितृकार्यकरणात् अस्याः पितैव न पतिः, यश्चास्या अस्थीनि गङ्गायां निक्षेप्तुं गतः स पुत्र एव न पतिः पुत्रधर्मा-नुष्ठानात्, यस्त्वस्या भस्मशय्यामधिशय्य श्मशान एव तपस्तेपे, स एवास्याः कृतप्रणयतया पतिर्भवितु मर्हति इति । ततस्ते नरपतेर्निर्णयेन यथाकथंचित्

४

त्यक्तकलहाः कन्यकामादाय तत्पितृगृहं जग्मुः। तत्र च राजनिर्णयानुसारेण भस्मशायी तामुपायंस्त मन्दारवतीम् ।

---

# दशमः प्रपाठकः

## पुष्पकविमानेन समुद्रलङ्घनम्

### रामचन्द्र उवाच

एतत् पश्य यथा क्षिप्रं प्रतिगच्छामि तां पुरीम् ।
अयोध्यां गच्छतो ह्येष पन्थाः परमदुर्गमः ॥ १ ॥
एवमुक्तस्तु काकुत्स्थं प्रत्युवाच विभीषणः ।
अह्ना त्वां प्रापयिष्यामि तां पुरीं पार्थिवात्मज ! ॥ २ ॥
पुष्पकं नाम भद्रन्ते विमानं सूर्यसन्निभम् ।
मम भ्रातुः कुबेरस्य रावणेन बलीयसा ॥ ३ ॥
हृतं निर्जित्य संग्रामे कामगं दिव्यमुत्तमम् ।
त्वदर्थे पालितञ्चेदं तिष्ठत्यतुलविक्रम ! ॥ ४ ॥
तदिदं मेघसङ्काशं विमानमिह तिष्ठति ।
तेन यास्यसि यानेन त्वमयोध्यां गतज्वरः ॥ ५ ॥
अहं ते यद्यनुग्राह्यो यदि स्मरसि मे गुणान् ।
वस तावदिह प्राज्ञ ! यद्यस्ति मयि सौहृदम् ॥ ६ ॥
लक्ष्मणेन सह भ्रात्रा वैदेह्या चापि भार्य्यया ।

अर्चितः सर्वकामैस्त्वं ततो राम ! गमिष्यसि ॥ ७ ॥

राम उवाच

पूजितोऽस्मि त्वया वीर ! साचिव्येन परन्तप !
सर्वात्मना च चेष्टाभिः सौहार्देन परेण च ॥ ८ ॥
न खल्वेतन्न कुर्य्यां ते वचनं राक्षसेश्वर ! ।
तं तु मे भ्रातरं द्रष्टुं भरतं त्वरते मनः ॥ ९ ॥
मां निवर्त्तयितुं योऽसौ चित्रकूटमुपागतः ।
शिरसा याचतो यस्य न कृतं वचनं मया ॥१०॥
कौसल्यां च सुमित्रां च कैकेयीं च यशस्विनीम् ।
गुरूंश्च सुहृदश्चैव पौरान् जानपदैः सह ॥११॥
अनुजानीहि मां सौम्य ! पूजितोऽस्मि विभीषण ! ।
मन्युर्न खलु कर्त्तव्यः सखे ! त्वां चानुमानये ॥१२॥
उपस्थापय मे शीघ्रं विमानं राक्षसेश्वर ! ।
कृतकार्य्यस्य मे वासः कथं स्याद् इह सम्मतः ॥१३॥
एवमुक्तस्तु रामेण राक्षसेन्द्रो विभीषणः ।
विमानं सूर्य्यसङ्काशम् आजुहाव त्वरान्वितः ॥१४॥
ततः काञ्चनचित्राङ्गं वैदूर्य्यमणिवेदिकम् ।

कूटागारैः[1] परिक्षिप्तं सर्व्वतो रजतप्रभम् ॥१५॥
पाण्डुराभिः पताकाभिर्ध्वजैश्च समलङ्कृतम् ।
शोभितं काञ्चनैर्हर्म्यैर्हेमपद्मविभूषितम् ॥१६॥
प्रकीर्णं किङ्किणीजालैर्मुक्तामणिगवाक्षितम् ।
घण्टाजालैः परिक्षिप्तं सर्व्वतो मधुरस्वनम् ॥१७॥
तन्मेरुशिखराकारं निर्म्मितं विश्वकर्म्मणा ।
बृहद्भिर्भूषितं हर्म्यैर्मुक्तारजतशोभितैः ॥१८॥
तलैः स्फाटिकचित्राङ्गैर्वैदूर्य्यैश्च वरासनैः ।
महार्हास्तरणोपेतैरुपपन्नं महाधनैः ॥१९॥
उपस्थितमनाधृष्यं तद्विमानं मनोजवम् ।
निवेदयित्वा रामाय तस्थौ तत्र विभीषणः ॥२०॥
ततस्तान् पूजितान् दृष्ट्वा रत्नै रथैश्च यूथपान् ।
आरुरोह तदा रामस्तद्विमानमनुत्तमम् ॥२१॥
अङ्केनादाय वैदेहीं लज्जमानां यशस्विनीम् ।
लक्ष्मणेन सह भ्रात्रा विक्रान्तेन धनुष्मता ॥२२॥
अब्रवीत् स विमानस्थः पूजयन् सर्व्ववानरान् ।
सुग्रीवञ्च महावीर्य्यं काकुत्स्थः सविभीषणम् ॥२३॥

---

१. शिरोगृहैः ।

मित्रकार्य्यं कृतमिदं भवद्भिर्वानरर्षभाः ।
अनुज्ञाता मया सर्वे यथेष्टं प्रतिगच्छत ॥२४॥
यत्तु कार्य्यं वयस्येन स्निग्धेन च हितेन च ।
कृतं सुग्रीव ! तत् सर्व्वं भवता धर्म्मभीरुणा ॥२५॥
किष्किन्धां प्रति याह्याशु स्वसैन्येनाभिसंवृतः ॥२६॥
स्वराज्ये वस लङ्कायां मया दत्ते विभीषण ! ।
न त्वां धर्षयितुं शक्ताः सेन्द्रा अपि दिवौकसः ॥२७॥
अयोध्यां प्रति यास्यामि राजधानीं पितुर्मम ।
अभ्यनुज्ञातुमिच्छामि सर्व्वांश्चामन्त्रयामि वः ॥२८॥

सविभीषणा वानरा ऊचुः

अयोध्यां गन्तुमिच्छामः सर्वान्नयतु नो भवान् ॥२९॥

राम उवाच

प्रियात् प्रियतरं लब्धं यदहं ससुहृज्जनः ।
सर्वैर्भवद्भिः सहितः प्रीतिं लप्स्ये पुरीं गतः ॥३०॥
क्षिप्रम् आरोह सुग्रीव ! विमानं सह वानरैः ।
त्वमप्यारोह सामात्यो राक्षसेन्द्र विभीषण! ॥३१॥
ततस्तत् पुष्पकं दिव्यं सुग्रीवः सह वानरैः ।
आरुरोह मुदा युक्तः सामात्यश्च विभीषणः ॥३२॥

कैलाशशिखराकारे त्रिकूटशिखरे स्थिताम् ।
लङ्कामीक्षस्व वैदेहि ! निर्मितां विश्वकर्मणा ।।

आरूढेषु तु सर्वेषु कौबेरं परमासनम् ।
राघवेणाभ्यनुज्ञातमुत्पपात विहायसम् ॥३३॥
स्वर्गतेन विमानेन हंसयुक्तेन भास्वता ।
प्रहृष्टश्च प्रतीतश्च बभौ रामः कुबेरवत् ॥३४॥
पातयित्वा ततश्चक्षुः सर्व्वतो रघुनन्दनः ।
अब्रवीन्मैथिलीं सीतां रामः शशिनिभाननाम् ॥३५॥
कैलासशिखराकारे त्रिकूटशिखरे स्थिताम् ।
लङ्कामीक्षस्व वैदेहि ! निर्म्मितां विश्वकर्म्मणा ॥३६॥
एतदायोधनं पश्य मांसशोणितकर्दमम् ।
हरीणां राक्षसानां च सीते ! विशसनं महत् ॥३७॥
एष दत्तवरः शेते प्रमाथी राक्षसेश्वरः ।
तवहेतोर्विशालाक्षि ! निहतो रावणो मया ॥३८॥
निहतः कुम्भकर्णोऽत्र प्रहस्तश्च निशाचरः ।
निहतश्चात्र धूम्राक्षो वानरेण हनूमता ॥३९॥
लक्ष्मणेनेन्द्रजिच्चात्र रावणिर्निहतो रणे ॥४०॥
अत्र मन्दोदरी राज्ञी रावणं पर्य्यदेवयत् ।
सपत्नीनां सहस्रेण सास्रेण परिवारिता ॥४१॥
एतत्तु दृश्यते तीर्थं समुद्रस्य वरानने !

यत्र सागरमुत्तीर्य्य तां रात्रिमुषिता वयम् ॥४२॥
एष सेतुर्मया बद्धः सागरे लवणार्णवे ।
तव हेतोर्विशालाक्षि ! नलसेतुः सुदुष्करः ॥४३॥
पश्य सागरमक्षोभ्यं वैदेहि ! वरुणालयम् ।
अपारमभिगर्जन्तं शङ्खशुक्तिसमाकुलम् ॥४४॥
एतत्तु दृश्यते तीर्थं सागरस्य महात्मनः ।
सेतुबन्ध इति ख्यातं त्रैलोक्येनाभिपूजितम् ॥४५॥

---

# एकादशः प्रपाठकः

## दुर्योधनं प्रति केशवस्य दौत्यम्

( १ )

काञ्चुकीयः—जयतु महाराजः। एष खलु पाण्डवस्कन्धावाराद् दौत्येनागतः पुरुषोत्तमो नारायणः।

दुर्योधनः—मा तावद् भो बादरायण ! किं किं कंसभृत्यो दामोदरस्तव पुरुषोत्तमः। स गोपालकस्तव पुरुषोत्तमः। जरासंधापहृतकीर्तिस्तव पुरुषोत्तमः। अहो पार्थिवासन्नस्य भृत्यजनस्य समुदाचारः। सगर्वं खल्वस्य वचनम्। आ ! अपध्वंसस्व।

काञ्चुकीयः—प्रसीदतु प्रसीदतु महाराजः। संभ्रमेण समुदाचारो विस्मृतः। ( इति पादयोः पतति )

दुर्योधनः—संभ्रम इति। आ! मनुष्याणामस्त्येव संभ्रमः। उत्तिष्ठोत्तिष्ठ।

काञ्चुकीयः—अनुगृहीतोऽस्मि।

दुर्योधनः—इदानीं प्रसन्नोऽस्मि । क एष दूतः प्राप्तः ।

काञ्चुकीयः—दूतः प्राप्तः केशवः ।

दुर्योधनः—केशव इति । एवमेष्टव्यम् । अयमेव समुदाचारः ।

भो भो राजानः ! दौत्येनागतस्य केशवस्य किं युक्तम् । किमाहुर्भवन्तः—अर्घ्यप्रदानेन पूजयितव्यः केशव इति । न मे रोचते । ग्रहणमस्यात्र हितं पश्यामि ।

ग्रहणमुपगते तु वासुदेवे
हृतनयना इव पाण्डवा भवेयुः ।
गतिमतिरहितेषु पाण्डवेषु
क्षितिरखिलापि भवेन्ममाऽसपत्ना ॥

अपि च योऽत्र केशवस्य प्रत्युत्थास्यति, स मया द्वादशसुवर्णभारेण दण्ड्यः । तदप्रमत्ता भवन्तु भवन्तः (आत्मगतम्) को नु खलु इदानीं ममाप्रत्युत्थानस्योपायः । हन्त दृष्ट उपायः । (प्रकाशम्) बादरायण ! आनीयतां स चित्रपटो ननु, यत्र द्रौपदीकेशाम्बरावकर्षणमालिखितम् । (आत्मगतम्)

तस्मिन् दृष्टिविन्यासं कुर्वन् नोत्थास्यामि केशवस्य।

काञ्चुकीयः—यदाज्ञापयति महाराजः ( निष्क्रन्य प्रविश्य ) जयतु महाराजः। अयं स चित्रपटः।

दुर्योधनः—ममाग्रतः प्रसारय।

काञ्चुकीयः—यदाज्ञापयति महाराजः। ( प्रसारयति )।

दुर्योधनः—अहो ! दर्शनीयोऽयं चित्रपटः। एष दुःशासनो द्रौपदीं केशहस्ते गृहीतवान्। एषा खलु द्रौपदी,

दुःशासनपरामृष्टा संभ्रमोत्फुल्ललोचना।
राहुवक्त्रान्तरगता चन्द्रलेखेव शोभते॥

एष दुरात्मा भीमः सर्वराजसमक्षमवमानितां द्रौपदीं दृष्ट्वा प्रवृद्धामर्षः सभास्तम्भं तुलयति। एष युधिष्ठिरः,

सत्यधर्मघृणायुक्तो द्यूतविभ्रष्टचेतनः।
करोत्यपाङ्गविक्षेपैः शान्तामर्षं वृकोदरम्॥

एष इदानीमर्जुनः

रोषाकुलाक्षः स्फुरिताधरोष्ठ-
स्तृणाय मत्त्वा रिपुमण्डलं तत् ।
उत्सादयिष्यन्निव सर्वराजान्
शनैः समाकर्षति गाण्डिवज्याम् ॥

एष युधिष्ठिरोऽर्जुनं वारयति । एतौ नकुल-
सहदेवौ,

कृतपरिकरबन्धौ चर्मनिस्त्रिंशहस्तौ
परुषितमुखरागौ स्पष्टदष्टाधरोष्ठौ ।
विगतमरणशङ्कौ सत्त्वरं भ्रातरं मे
हरिमिव मृगपोतौ तेजसाऽभिप्रयातौ ॥

एष युधिष्ठिरः कुमारौ निवारयति ।
एष गान्धारराजः,

अक्षान् क्षिपन् स कितवः प्रहसन् सगर्वं
संकोचयन्निव मुदं द्विषतां स्ववृत्त्या ।
स्वैरासनो द्रुपदराजसुतां रुदन्तीं
काक्षेण पश्यति लिखत्यपि गां नयज्ञः[1] ॥

एतावाचार्यपितामहौ तां दृष्ट्वा विलज्जमानौ

---

१. नयं द्यूतविशेषं जानाति सः ; cf. नीया, पूड़ा ।

पटान्तान्तर्हितमुखौ स्थितौ।

अहो अस्य चित्रस्य वर्णाढ्यता। अहो भावोपपन्नता! अहो युक्तलेखता! सुव्यक्तमा लिखितोऽयं चित्रपटः। प्रीतोऽस्मि। कोऽत्र भोः?

काञ्चुकीयः—जयतु महाराजः।

दुर्योधनः—बादरायण! आनीयतां स विहगवाहनमात्रविस्मितो दूतः।

काञ्चुकीयः—यदाज्ञापयति महाराजः (निष्क्रान्तः)

दुर्योधनः—वयस्य! कर्ण!

प्राप्तः किलाद्य वचनादिह पाण्डवानां
दौत्येन भृत्य इव कृष्णमतिः स कृष्णः।
श्रोतुं सखे! त्वमपि सज्जय कर्ण! कर्णौ
नारीमृदूनि वचनानि युधिष्ठिरस्य॥

—

## द्वादशः प्रपाठकः

### वञ्चनाप्रपञ्चः

स्तोतारः के भविष्यन्ति मूर्खस्य जगतीतले ।
न स्तौति चेत्स्वयं च स्वं कदा तस्यास्तु निर्वृतिः ॥१॥
वाच्यतां समयोऽतीतः स्पष्टमग्रे भविष्यति ।
इति पाठयतां ग्रन्थे काठिन्यं कुत्र वर्तते ॥२॥
अगतित्वमतिश्रद्धा ज्ञानाभासेन तृप्तता ।
त्रयः शिष्यगुणा ह्येते मूर्खाचार्यस्य भाग्यजाः ॥३॥
यदि न क्वापि विद्यायां सर्वथा क्रमते मतिः ।
मान्त्रिकास्तु भविष्यामो योगिनो यतयोऽपि वा ॥४॥
पुत्र इत्येव पितरि कन्यकेत्येव मातरि ।
गर्भप्रश्नेषु कथयन्दैवज्ञो विजयी भवेत् ॥५॥
निर्धनानां धनावाप्तिं धनिनामधिकं धनम् ।
ब्रुवाणाः सर्वथा ग्राह्या लोकैर्ज्यौतिषिका जनाः ॥६॥
स्वस्थैरसाध्यरोगैश्च जन्तुभिर्नास्ति किंचन ।

कातरा दीर्घरोगाश्च भिषजां भाग्यहेतवः ॥७॥
भैषज्यं तु यथाकामं पथ्यं तु कठिनं वदेत् ।
आरोग्यं वैद्यमाहात्म्यादन्यथात्वमपथ्यतः ॥८॥
कातर्यं दुर्विनीतत्वं कार्पण्यमविवेकताम् ।
सर्वं मार्जन्ति कवयः शालीनां मुष्टिकिंकराः ॥९॥
न कारणमपेक्षन्ते कवयः स्तोतुमुद्यताः ।
किंचिदस्तुवतां तेषां जिह्वा फुरफुरायते ॥१०॥
स्तुतं स्तुवन्ति कवयो न स्वतो गुणदर्शिनः ।
कीटः कश्चिदलिर्नाम कियती तत्र वर्णना ॥११॥
एकैव कविता पुंसां ग्रामायाश्वाय हस्तिने ।
अन्ततोऽन्नाय वस्त्राय ताम्बूलाय च कल्पते ॥१२॥
वर्णयन्ति नराभासान् वाणीं लब्ध्वापि ये जनाः ।
लब्ध्वापि कामधेनुं ते लाङ्गले विनियुञ्जते ॥१३॥
न पश्यामो मुखे दंष्ट्रां न पाशं वा कराञ्चले ।
उत्तमर्णमवेक्ष्यैव तथाप्युद्विजते मनः ॥१४॥
शक्तिं करोति संचारे शीतोष्णं मर्षयत्यपि ।
दीपयत्युदरे वह्निं दारिद्र्यं परमौषधम् ॥१५॥
प्रकाशयत्यहंकारं प्रवर्तयति तस्करान् ।

प्रोत्साहयति दायादाँल्लक्ष्मीः किंचिदुपस्थिता ॥१६॥
प्रामाण्यबुद्धिः स्तोत्रेषु देवताबुद्धिरात्मनि ।
कीटबुद्धिर्मनुष्येषु नूतनायाः श्रियः फलम् ॥१७॥
स्तोतव्यैः स्तूयते नित्यं सेवनीयैश्च सेव्यते ।
न बिभेति न जिह्रेति तथापि धनिको जनः ॥१८॥
अध्यापयन्ति शास्त्राणि तृणीकुर्वन्ति पण्डितान् ।
विस्मारयन्ति जातिं स्वां वराटाः पञ्चषाः करे ॥१९॥
शुष्कोपवासो धर्मेषु भैषज्येषु च लङ्घनम् ।
जपयज्ञश्च यज्ञेषु रोचते लोभशालिनाम् ॥२०॥
एकतः सर्वशास्त्राणि तुलसीकाष्ठमेकतः ।
वक्तव्यं किंचिदित्युक्तं वस्तुतस्तुलसी परा ॥२१॥
कौपीनं भसितालेपो दर्भा रुद्राक्षमालिका ।
मौनमेकासिका चेति मूर्खसंजीवनानि षट् ॥२२॥
आमध्याह्न नदीवासः समाजे देवतार्चनम् ।
सततं शुचिवेषश्चेत्येतद्दम्भस्य जीवितम् ॥२३॥
तावद्दीर्घं नित्यकर्म यावत्स्याद्द्रष्टृमेलनम् ।
तावत्संक्षिप्यते सर्वं यावद्द्रष्टा न विद्यते ॥२४॥
आनन्दबाष्परोमाञ्चौ यस्य स्वेच्छावशंवदौ ।

किं तस्य साधनैरन्यैः किंकराः सर्वपार्थिवाः ॥२५॥
परच्छिद्रेषु हृदयं परवार्तासु च श्रवः ।
परमर्मसु वाचं च खलानामसृजद्विधिः ॥२६॥

